# गन्धावली

गन्धाख्ये छन्दसि संदृब्धानां
मुक्तकपुष्पाणां हारः

एस्.जगन्नाथः

अन्तर्जालम्।
मे २०१५

**गन्धावली:** गन्धाख्ये छन्दसि स्वयं रचितानां ३३५ मुक्तकानां श्रेणिः
**रचयिता :** एस्.जगन्नाथः मैसूरु।
**अक्षरोट्टङ्कनकारी पुटविन्यासकारी चः** एस्.जगन्नाथ, मैसूरु।

**प्रकाशकम्:**
sanskritebooks अन्तर्जालम्
मे २०१५

## गन्धावल्या रचयितुर्मम जगन्नाथाख्यस्यैतदिह वक्तव्यं यथा-

गन्धावलीयं गन्धच्छन्दसि मद्रचितानां मुक्तकानां श्रेणिः।

कन्नडे वर्तमानस्य कन्दच्छन्दसः मूलं किल स्कन्धकमथवा आर्यागीतिः।आर्याछिन्दसि पूर्वं केवलं पादद्वयमासीत्।परन्तु केनापि तत्र पादचतुष्टयं कल्पितवता प्रथमतृतीययोस्त्रयो गणाः, द्वितीय-चतुर्थयोश्च पञ्च गणाः निर्धारिताः। 'सर्वेषु पादेषु चत्वारो गणाः कुतो न स्रष्टव्या' इति पर्यनुयोगः मानसं मदीयं तुदति स्म।'किमर्थमन्यान् पृच्छेयं, स्वयं मयैव इत्थंभूता छन्दोगतिः कुतो न साधनीया' इति प्रबलतमया प्रेरणया नुन्नोऽहं तत्र प्रावर्ते।यत्फलतया सृष्टा गतिः प्रथमं 'खण्ड' इत्याधत्त संज्ञाम्।ततश्च तत्रामनोहारित्वं पश्यता मया विहितेन 'गन्ध' इति संज्ञान्तरेण भूषिता सा गतिः।पद्यान्यपि संचारितानि तया गत्या।पादद्वयमय्याम् आर्यायां 'विषमेषु स्थानेषु जगणनिषेधः, षष्ठे स्थाने (गन्धच्छन्दसि च द्वितीयचतुर्थपादयोर्द्वितीये स्थाने) सदाऽपि जगणः,नगणसहितो लघुर्वा' इति ये विधयस्ते सर्वेऽत्र समुच्चाटिताः, कन्नडे वर्तमानो द्वितीयाक्षरप्रासविधिरपि नानुष्ठितः।

नात्र विषयाणां कोऽपि क्रमः। यथा यथा वस्तूनि मम हृदये अभान् तथा तथा पद्यान्यरचयम् अस्थापयं च ।पाठकाः यमपि कमपि पुटमुद्घाट्य यत् किमपि पद्यं पठितुमास्वादयितुं चार्हन्ति।

अत्राक्षरोट्टङ्कनं, पुटविन्यासः, मुखपत्रयोराकारः एतत्सर्वं मयैव विहितम्।

ममादरस्य भाजनमस्ति प्रकाशितैतद्रचनाकः sanskrit ebooks अन्तर्जालस्य स्वामी श्रीमान् शङ्करः ।

**-इति।**

# गन्धावली

१.गन्धच्छन्दसि मम हृदयेच्छा-
जातैः प्रासैरथ च चतुर्भिः।
चतुरक्षरमात्रायुक्पादैः
सञ्चालयामि दृश्यां जगतीम्॥

हृदयेच्छाजातैः=
वैकल्पिकैः।

२.कन्दं स्कन्धक आर्यागीति-
स्तिस्रः संज्ञा एता यस्य।
तस्य च्छन्दस एष हि बन्धुर्
गन्धस्तद्गतिसमगतिमत्वात्॥

कन्दमिति कन्नडे
प्रसिद्धं छन्दः।

३.जगणः स्थलेऽस्तु समेऽपि विषमेऽ-
प्यदोषमेतच्छन्दस्तथापि।
यन्मम हृदयाज्ञातं, करिणा
पन्था यः क्रियते स हि पन्थाः॥

मम हृदये यद्
भातं तदेवादोषं
ग्राह्यमिति
यावत्।

४.भातं ध्यातं ज्ञातं व्यवहृत-
मपि यत् तस्य स्पन्देनाहम्।
उपयुञ्जानो गन्धच्छन्दो
जनतां कम्पयितुं प्रयतेऽलम्॥

अलम्=पर्याप्तं
यथा स्यात्तथा।

५.अस्यां कृत्यां विषयानुगुणं
क्रममाद्रिये न कमपि स्पष्टम्।
मम हृद्विपिने द्रून् पल्लवितान्
चिन्तनवृष्ट्या करोमि फलितान् ॥

हृद्विपिने=हृदयारण्ये
द्रून्=द्रुमान्।

६.आश्चर्याय न निजकण्ठाद् यत्
स्वरं श्रुतिकटुं निःसारयसि।
वृक्षे काकप्रायेऽस्मिन् यत्
कूजसि कोकिल ! तद् विस्मित्यै॥

विस्मित्यै=विस्मयाय।

७.भ्रमरापश्यो न पिपीलिकाभि-
रनपेक्षितं स्थलं कुत्रापि।
तस्मादण्डनिधानेऽवधान-
पूर्वकमेव त्वं वर्तस्व॥

हे भ्रमर ! न अपश्यः त्वम्।

८.कैरपि धन्यैर्घुष्टेऽप्यसकृद्
‘गुणदर्शन’मिति ‘गुणदर्शन’मिति।
कोऽप्याततायिदर्शितहत्या-
चातुर्यं न स्तौति विवेकी ॥

‘अग्निदो गरदश्चैव शस्त्रपाती धनापहः। क्षेत्रदारहरश्चैव षडेते त्वाततायिनः’ इति स्मृतिश्लोकः क्षीरस्वाम्युद्धृत इति शिवदत्तदाधिमथ-संपादितेऽमरकोशे। करुणालेशेनापि हीना हत्यादिकर्मणा क्रूरा आततायिनः।

९.दोषे हिंस्रे दृष्टेऽन्येषां
रोषेतरस्वभावा ये तैः।
रोगिभिरथवा भोगिभिरथवा
भाव्यं ; न योगिभिर्न च सद्भिः॥

१०.केचन कपयः, केचन किटयः,
केचन हरिणाः, केचन हरयः।
वपुषा मनसा व्यवहारेण च
विसदृशमेव स्तरमारूढाः॥

किटयः=वराहाः। हरयः=सिंहाः।

११.द्यूतमधर्माध्वनि गन्तॄणाम्
एव प्रियमिति सर्वैर्विदितम्।
द्यूते धर्मं पश्यन् धर्मज
ऐक्षिष्ट नैव धर्माध्वानम्॥

१२.सुखेन डयतामभ्रे पक्षी
किन्तु श्राम्यति यः सन्ताने स्वे।
वृक्षान्वेषणकाष्ठासंचय-
कुलायरचनाण्डावननिरतः॥

सन्ताने=सन्तान-विषये। विषय-सप्तमी। कुलायः=(नीडम्)रचना+अण्ड+अवन(रक्षण)+निरतः ।

१३.स्वोदरनिर्वाहार्थं क्रौर्यं
दृष्टं श्येने परखगवधके।
स्वं वात्सल्यरसाढ्यत्वं यो
निजपोतपोषणे दर्शयति॥

१४.गुणदोषौ व्यत्यस्य ब्रवीतु
हास्योत्पत्त्यै मित्रं मित्रे।
किन्तु तथाऽन्यत्र वदन् मूर्खो
धूर्तो जडोऽविवेकी वा स्यात्॥

१५.किं कथयामो विधिनियमेषु
प्रायो ये हन्तास्तव्यस्ताः।
अलसः सिंहो घोरशरीरो
मृगयां करोतु सिंही यस्मै॥

मृगयां सिंही करोति, न पुनः सिंह इति तज्जातिस्वभावः।

१६.किं चमरपुच्छ ! गन्तुं लषसि
द्रुमशाखाया अग्रे चपल !।
शाखेव दृश्यमानोऽयं जड !
सर्पः प्रतीक्षते यो भक्ष्यम्॥

१७.चित्रक ! मृगयाचातुर्यं ते
कुत्र गतं ? येनासकृदद्य।
यतमानो हरिणस्य ग्रहणे
विफलः सन् म्लानास्यस्तिष्ठसि॥

१८.द्वेषो रोषो हिंसा हास्यं
करुणा शान्तिः शृङ्गारश्च।
जीवनपटचित्राण्येतानि
व्यरचिषत चित्रकृद्दैवेन॥

१९.नार्थः स्वयमेवानर्थाय
स्वार्थाय परहितार्थाय च चेत्।
परपीडायै यदि तदुपयुक्ति-
रार्या वदन्ति तं वस्त्ववरम्॥

२०. उच्चैरुग्रमसभ्यं द्राङ्क्षन्
तुष्टूयते कदाचित् सभ्यैः।
प्रायो निमित्तमत्र ज्ञानो-
त्पत्युत्तरकालिकं जडत्वम्॥

तुष्टूयते=भृशं स्तूयते। यङ्। विद्यावद्भिः कदाचित् अविद्यावद्भिरिव दुष्टाः स्तूयन्ते।

२१.कवयः ! कियद्भिरपि न विकारै
रचितैरुदेति तृप्तिः किं वः ?
वस्तुनि रामायणभारतयोर् ;
अलमेतैर्वस्त्वादत्त नवम्॥

२२.अधिकारिणो मुखात् प्रभ्रष्टान्
अपशब्दानपि नुवन्ति केचित्।
येऽन्वेषन्ते छिद्राणीतर-
मुखतः शब्देषु विसृष्टेषु॥

नुवन्ति=स्तुवन्ति। णु स्तुतौ।

२३.डयमानो विहगोऽधः करोतु
जलदान्, बिभर्तु गर्वं च परम्।
जीवनहेतोस्तेनावडीन-
मवनिं प्रति करणीयं बाढम्॥

जीवनं जलमपि। अवडीनं=अधोमुखं डीनम्।

२४.उपयोज्यं मस्तिष्कं जगति
स्वीयं कदाऽपरीयं कदेति।
सम्यग्ज्ञानाभावात् सर्वे
क्लेशा रोषावेशा द्वेषाः॥

स्वीयं=स्वकीयम्।
परीयं=परकीयम्।

२५.शास्त्राण्यधीत्य काव्यान्यवेक्ष्य
सुखदुःखान्यनुभूय, ज्ञातम्।
संक्रामय्य च हृदयेऽन्येषाम्
उत्सृज देहं सन्तोषेण॥

ज्ञातस्य विषयस्य संक्रमणं कारयित्वा।

२६.आचारे श्रद्धालुः , स्वीये
कर्मणि यो जागर्ति जनस्तम्।
आगस्वन्तं वदन्ति ये ते
स्वयमागस्वन्तो वर्तन्ते ॥

आगस्वन्तं=
अपराधिनम्।

२७.प्राचीनाचारेषु स्निह्यन्
यदि मन्यते स्वकर्तव्येषु।
शक्तिर्भवतीत्याचारैः स्वैः
श्लाघ्या तस्याचारश्रद्धा॥

२८.द्वात्रिंशद्दन्तानां सततं
प्रदर्शनं किं जीवनसारः ?।
रोदनमाक्रोशनमथ गर्जन-
मेतान्यपि जीवने भवन्ति ॥

२९.यस्मिन् कर्मणि ये कुशलास्ते
तस्मिन् कर्मण्येव नियोज्याः।
न चञ्चुसूचिः कूजति मधुरं
विजृम्भते यो नीडस्यूतौ॥

चञ्चुसूची=
चञ्च्वा पर्णानां स्यूतिं कृत्वा नीडं निर्मान्
पक्षिविशेषः।

३०.इङ्ग्लीष् उपविशति विश्वसंस्कृत-
सम्मेलनेषु सैंहे पीठे।
राजस्वोष्ट्रासन आध्यक्षे
मयूरसभेषु ; कः प्रष्टा त्वाम् ?॥

३१.ग्रन्थं कमप्यरचयन्तोऽपि
प्राचार्यत्वं ये ख्यापयन्ति।
ते हन्त विश्वविद्यानिलये
- दुग्धसरसि पङ्का इव - कलुषाः ॥

सैंहे पीठे= सिंहासने। राजस्व+ (हे) उष्ट्र ! आसने=पीठे+ आध्यक्षे= अध्यक्षार्हे। अण्। मयूरसभेषु-अत्र 'सभा राजाऽ-मनुष्यपूर्वे' ति सूत्रं स्मर्यताम्।

३२.रीत्या रसेन सद्भाषितेन
केनापि हारिणा सद्गुणेन।
उत्कृष्टं साहित्यं रचय
प्रीतिसुमैरर्चतु जनता त्वाम्॥

३३.सन्ति न वा देवता - न जाने,
जाने परन्तु तत्स्तोत्राणि ।
कृतानि ऋषिभिः कविभिरपि यानि
भाषादृष्ट्या परमाद्भुतानि॥

३४.कुर्वन्ति पिशाचप्राणसखान्
नृपतीन् सुमनोधर्माढ्यानिव।
कवयो ये ते नीचाः स्वयमुत
कविताभिन्नज्ञानविहीनाः॥

सुमनसां=पुष्पाणां धर्मः कोमलत्वम्।

३५.कवितासृष्टिर्हृदये रथगति-
रिव रथ्यायां कदापि सरला।
कण्टकदृषदाकीर्णे कदापि
पथीव पदगतिरसकृत्स्खलना॥

दृषत्=प्रस्तरः।

३६.खग ! चतुरोऽसि स्वोदरपूरण-
मात्रेच्छायां गवि तृण्यायाः।
तुण्डात् कुर्वन्त्यामुन्मूलन-
मत्सि कृमींस्तदधःस्थान् योऽरम् ॥

तृण्या=तृणसमूहः। खगः=एष पक्षी Cattle Egret बेळ्ळक्कि इति भाषायाम्। अरम्=शीघ्रम्।

३७.रभसाद् वात्यतिशीतो वायुः
पश्यसि भूमिं नाम्बुदलीनः।
डयमानस्य तवाभ्रे हंस !
स्तुमः पदैः कैः प्रबलौ पक्षौ ?॥

३८.'मनसा वाचा कायेनापि
व्यवहाराः कार्या' इति वार्ता।
'एकस्मिन् दिवसे त्यक्त्वैतान्
गन्तव्यं द्रुत'मित्यपि वार्ता।

३९.नेत्रासेचनकैः सुमनोभिः
पल्लवपत्रशलाटुफलैश्च।
राजन्ते यत् तरवो लोके
मूलानां तन्महिमोत्कृष्टः॥

सुमनोभिः=पुष्पैः।

४०.'न किमपि वैभवमटवीवृक्षेष्व्
अहमस्मि पुरे वैभवशाली।'
इति पुरविटपिन् ! गर्वं मोद्वह
पौरैश्छिद्यस आश्वध्वार्थम्॥

विटपिन्!= वृक्ष! मा+उद्वह। आशु +अध्व (मार्ग) +अर्थम् ।

४१.'कुक्ष्यर्थं मे सर्वे हरिणा
जाता' इति मा घोषय चित्रक !
आत्मानं मोचयति त्वत्तो
हरिणे, गर्वस्तव क्व यातु ?॥

मोचयति सति।

४२.सर्वो जन्तुः कुशली कस्मिं-
श्चन विषये कस्मिन्नपि दोषी।
मधुरं गाता स्वार्भकपोषण-
मन्यैर्विहगैः पिक इव रचयन्॥

४३.विदूषका इव धृतपदवीका
घटिकोत्सवेषु धरन्ति शीर्षे।
चतुरस्त्रं फलकं लम्बमान-
सूत्रेण युतं हास्याय सताम्॥

४४.योगोऽभ्यस्तो सिद्धिर्नाप्ता
पतञ्जलिः किमसत्यमुवाच?।
योगिभिरवनौ निबिडायां को
वास्तविकः पातञ्जलयोगी?॥

४५.कदापि सौम्यः कदापि घोरः
कदापि साधुः कदापि दुष्टः।
जीवी नानावेषधरो नट-
लीलोऽस्ति विश्वनाटकरङ्गे॥

४६.'त्रिचतुरशास्त्रव्याहारैः श्रुति-
पतितैर्लब्धं सार्वज्ञ्य'मिति।
संशोधनप्रबन्धान् रचयन्त्व्
एके ; श्लाघन्तां तानपरे॥

४७.चौर्यं काव्येषु प्रथितमेव
चौर्यं क्वाचित्कं शास्त्रेष्वपि।
'थीसीस्' इति प्रबन्धेषु परं
विरलमचौर्यं साम्प्रतिकेषु॥

४८.कुसममगन्धं नैवास्त्यल्पो
गन्धः केषाञ्चित् कुसुमानाम्।
कैरपि कीटैः सोऽपि ग्राह्यः
प्रबलघ्राणैरिति विस्मित्यै॥ विस्मित्यै=विस्मयाय।

४९.आयुः क्षीयत एवानुदिनं
कियदभिधेयं कियदाप्तव्यम् ?।
नूतनविषयाभिनवविचार-
प्रत्यग्रवस्तुसूक्ष्मांशेषु॥

५०.नानारीत्या दृश्या जगती
नानावृद्धिक्षयवत्येषा।
मूलं किमपि स्यादेतस्यास्
तद् यत् कालाबाध्यं सत्यम् ॥

५१.भानुरुदयते चन्द्र उदयते
मम हृदये भा काऽपि न भाति।
उपसर्पाणि कमध्यात्मगुरुं ?
धूर्तप्रायेऽस्मिन् विश्वस्मिन्॥

५२.देवस्थानमगच्छं कुतुकाद्
'विजृम्भतेऽत्राध्यात्मिकते'ति।
जनसम्मर्दात् कोलाहलाच्च
भिन्नमपश्यं किमपि न तत्र॥

५३.दृश्यं दृष्टिर्द्रष्टा चेति
त्रिपुटी सर्वा जगती भाति।
तस्या मूलं किमिति ध्यानं
परमोत्कृष्टं योगं विद्धि॥

५४.नगरेष्वपि कलकलपूर्णेषु
क्वचिदम्बकपथमायान्ति खगाः। अम्बकं=नेत्रम्।
शुकसारिकाकपोतप्रभृतय
एतान् अवगणयन्तो मूढाः॥

५५.अस्तः प्रायः कथाप्रसङ्गो
'वन्याः पशवः क्रूरा' इति यः।
आशंसन्ते कृपाकटाक्षान्
नृणामिदानीं ते हि वराकाः॥

५६.उन्नतकाण्डे यस्मिंश्चलसि
द्रुतमध ऊर्ध्वं क्रोशन्नुच्चैः।
तं नारिकेलममृतसमजलद-
मवैसि न चमरपुच्छ ! किमर्थम् ?॥

५७.''ईशो यः स ज्ञेयो नेता
तमृते कोऽपि न नेता, नृषु ये।
नेतृत्वयुजस्ते वध्या'' इति
गर्जन्तो यमसदनं प्रेष्याः॥

५८.शृङ्गारिणोऽथ दैवतभक्ताः
प्रतिदिनमवचिन्वन्ति सुमानि।
सन्दिग्धजीविता येन स्युः
कीटा ये मकरन्दाजीवाः॥

५९.जानुभ्यामंहनं शिशूनां
सदृशं, नैतद् युव-युवतीनाम्।
अथ यद्येतत् ताभिः क्रियते
दाप्याः सरुजो भैषज्यं ताः॥

जानुभ्याम् अंहनम्। अहि गतौ भ्वादिः। सदृशं=योग्यम्। सरुजः=रोगिणः।

६०.अविशेषज्ञा अपि सज्जन-को-
ट्यन्तर्गता दृगध्वानमिताः।
सुविशेषज्ञा अपि कुजनगणे
पतिता नेत्रपदव्यां पतिताः॥

दृगध्वानं=दृष्टिपथम्
इताः=गताः।
इण् गतौ।

६१.उरसि दृढा अपि शास्त्रविहीनाः
शास्त्रज्ञा अपि हृदये कम्प्राः।
न समाधाप्यन्ते किं कृच्छ्रे
शास्त्रज्ञा अपि किमशास्त्रज्ञैः ?॥

६२.शुक ! शुकि ! युवयोः पोता नीडे
कियच्चिरमदृष्टाभ्रा वसन्तु ?।
दिवसे कस्मिंश्चन तैः पक्षाः
कम्प्या एवाभ्रं द्रक्ष्यद्भिः।

६३.न खगाः सर्वे श्येन-सगर्भ्या
बिभ्यसि किं परविहगैर्मिलनात्।
पक्षित्वं तव पक्षोद्धाटन-
भवमितरथा न, हे शुकपोत !॥

सगर्भ्याः=सोदराः
सदृशा इति
यावत्।

६४.पठितास्वाध्यात्मिककृतिषु, गुराव्
उपसृप्ते , विहिते च ध्याने।
आध्यात्मिकतालेशो मम हृदि
नास्ति, क्व यानि करवाणि च किम् ?॥

६५.“पुरुषैः कृतोऽपमानः स्त्रीभिः
सोढव्य” इति प्रवचनकर्तृ।
यत् तत् कदापि शास्त्रं भवितुं
नार्हति, नतरां च धर्मशास्त्रम्॥

६६.ये दम्पतयो कुशलाः कर्मसु
गृहे च कार्यालये च नुत्याः।
संदापितसुतदुहितृज्ञानास्
तानन्तरेण कान् वन्देऽन्यान् ?॥

नुत्याः=स्तुत्याः।

६७.कालो गतः स "गुरवः सर्वे
पूज्या" इति यत्राश्रूयत गीः।
"दण्ड्या गुरवोऽप्यपराद्धा ये"
शास्त्रोक्तिरियं ग्राह्येदानीम्॥

गुरोरप्यवलिप्तस्य
कार्याकार्यमजानतः।
उत्पथं प्रतिपन्नस्य
कार्यं भवति शासनम्
इति सुभाषितम्।

६८.विहगाश्चतुष्पदः, कृमिकीटाः,
सलिलेचरा, नरा, उभयचराः।
नद्यो, नगा, वनानि, ग्रामाः,
पुराणि - सर्वं महाद्भुतमिदम् ॥

६९.मार्जयितुमलं नेत्रान्निःसर-
दश्रु तवैव द्वावपि हस्तौ।
पातयसि किमिति दृष्टिं साशां
परस्य जनस्य परयोः करयोः ?॥

हस्तौ अलं=
समर्थौ।

७०.अन्वेषस्व त्वयि सादृश्यं
चैत्तेन स्वास्थ्येन परेषाम्।
नाम्बरभूषणधनगृहविभवैर्
ये चित्तक्षोभाय कदाचित्॥

चैत्तेन=
मानसिकेन।

७१.न द्रष्टव्यं परिणयकालिक-
माडम्बरपरिमाणं किन्तु।
दम्पत्योः परिशील्यं सौख्यं
परस्परेणानुरागघनयोः॥

७२.स्वीये कर्मणि संलग्नतैव
लोके प्रायः परोपकारः।
उपकृतिवाञ्छारहितेऽपि जने
निर्बन्धेनोपकृतिर्हिंसा॥

कदाचिदपरेषां जीवनेऽनावश्यकस्य स्वप्रवेशस्याभाव एव परोपकार-पदाभिलप्यः।

७३.कस्याञ्चिदपि मृतायां कस्मिं-
श्चिदपि मृतेऽल्पे विरागदुःखे।
प्रारभ्येते ; कतिपयदिनानु -
सर्वाण्यपि कर्माणि प्राग्वत्॥

७४.न जीविनां किं सर्वेषामपि
पिचण्डपूर्त्यर्था व्यवहाराः ?
नृणां किं विसदृशमिति चिन्तनम्
अध्वा देवत्वप्राप्त्यर्थः॥

७५.पशौ पशुत्वं खगे खगत्वं
मीने मीनत्वं पर्याप्तम्।
नरे नरत्वं न च पर्याप्तं
यत् परिवर्त्यं देवत्वेन॥

७६.पत्ये साहाय्यं मृगयायाम्
अकुर्वते न क्रुध्यसि सिंहि !।
कारणमत्र प्रेमा सहना
हृत्स्थोऽथ तिरस्कारो वोग्रः ?॥

सिंही मृगयां करोति न पुनः सिंह इति तज्जातिस्वभावः।

७७.यावत् काकं स्तौषि पिक ! त्वं
तावत् "पिकस्य रवे मधुरता।
ममैव महिमे"ति स गर्वेण
स्वभुजास्फालनमनुवर्तयति॥

७८. यत्राहं जानामि सहस्रं
तत्रान्ये जानन्ति च लक्षम् ।
कोटेर्यत्र ज्ञानं मेऽस्ति
ज्ञानं तत्रार्बुदस्य तेषाम्॥

विद्योद्भवो गर्वो मा भूदित्यर्थः।

७९.उपविशसि पुण्डरीके भ्रमर !
स्मरणं च मनसि मम कारयसि।
रजतकरण्डकसंस्थापितस्य
नीलमणेरतिशोभाढ्यस्य॥

पुण्डरीकम्=श्वेतकमलम्।

८०.उत्तरतीरे तृण्या, नद्यां
नक्रो, हरिणः क्षुधया ग्लानः ।
स्थितेऽपि गतेऽपि तस्मिन् प्राणाः
संशयकोटिं भृशमारूढाः॥

तृण्या=तृणसमूहः।

८१.शान्ता अपि पर्वताः कदाचित्
परितो वमन्ति घोरं वह्निम्।
कुशली मृगखगकृमिसर्पादिः
परमुद्विग्नाः किं कुर्वन्तु ?॥

८२.स्मृत्वा कादाचित्कं प्रसङ्ग-
मुग्रं ये विषमुत्सारयन्ति।
तेष्वार्यत्वेन प्रथिता अपि
वर्तन्ते यत् तदसह्यं नः।

८३.सुखमभ्रे डयमानैर्विभिरपि
नाना क्लेशा अनुभूतव्याः।
वात्याहाराभावस्फूर्जथु-
नभसङ्गमभक्षकादिरूपाः।

विभिः=पक्षिभिः।

८४.केचन चपलस्वान्ताः कवयो
न कामशास्त्रकृती रचयन्ति।
परन्तु काव्येष्वश्लीलाब्धौ
विनिमज्जयन्ति नरान् सुरांश्च॥

८५.तृणशय्यायां यः परिभोगः
स न हंसतूलिकातल्पे स्यात्।
हन्त जना एतदजानाना
नानाभोगास्थै धुतमानाः॥

धुतः कम्पितो मानो यैः।

८६.प्रतिबिम्बस्य च मुकुरस्य च न
प्राणाः सन्ति तथापि प्राणी।
तञ्चैतञ्च प्रीत्या पश्यति
परिचाययतस्तस्य वपुर्यौ॥

८७.अ-परोपकार-चिन्तन-लेशे
सन्तानार्थं फलिते वृक्षे।
दानगुणोऽभ्यूह्यते नृभिर्यत्
तत् सूक्तीनां सृजनायैव॥

सन्तानार्थं=स्व(वृक्ष)सन्तानार्थम्। सूक्तीनां 'परोपकाराय फलन्ति वृक्षाः' इत्यादीनाम्।

८८.शीलितबहुविधराष्ट्राः केचन
सङ्कुचितस्वान्ता वर्तन्ते।
अदृष्टनिजराष्ट्रेतरराष्ट्रा
अपि सन्ति व्याकुचितस्वान्ताः॥

शीलित...= परिशीलित...

व्याकुचितस्वान्ताः= विशालहृदयाः।

८९.आहिण्डन्तां केचन मह्याम्
असाधयन्तः किमपि श्लाघ्यम्।
वीक्षन्तां च स्पृष्टध्येयान्
जनान् स्थितानेकत्र श्रेष्ठान्॥

आहिण्डन्ताम्= अटन्तु। मह्याम्= भूम्याम्।

९०.सहना-सीमायां भग्नायां
विस्माययन्ति सुजनाः कुजनान्।
अश्रद्धेयं भवति कदाचित्
काकीया गीर्निःसरति पिकात्॥

९१.पत्नी पतिः सुता पुत्रो वा
साध्नोतु जगति किमपि स्तुत्यम्।
किन्तु कुटुम्बायोधनभूमौ
ग्रहणं कष्टं विजयध्वजस्य॥

९२.द्वेषकलुषिताः कुटुम्बबन्धव
आसन् पूर्वस्मिन्नपि समये।
प्राणसखा दृढबद्धकुटुम्बाः
साम्प्रतिकेऽनेहस्यपि सन्ति॥

अनेहसि=काले।

९३.केचित् प्राच्यज्ञानाढ्या ये
स्वभुजे बिभ्रति विपुलां श्रद्धाम्।
केचित् पुष्कलनव्यज्ञाना
ये श्रितफलितज्यौतिषशास्त्राः॥

पूर्वार्धे वर्णितेभ्यो जनेभ्य उत्तरार्धे वर्णिता जना विरुद्धस्वभावाः।

९४.स्वादूक्तिर्निःसृता प्रसंगात्
करोति न खलं साधुजनमणिम्।
उग्रं वचो न कादाचित्कं
करोति साधुं खलजनराजम्॥

९५.ते योगज्ञा ये ध्यायन्ति
ज्ञातुं विषयानेतांश्चतुरः।
जीवनमरणे तयोराश्रयं,
तथा जगत्याः शास्त्रीं शक्तिम्॥

९६.उपायमाश्रयसे गज ! सलिलं
यं सरसः पङ्किलाद् ग्रहीतुम्।
ऊर्ध्वमृदुपरामर्शनरूपं
तेन त्वामभिदध्मश्चतुरम् ॥

९७.रोदनमश्रु स्मरणं भाषण-
मेतदनन्तरमस्मरणमिति।
मरणे जाते भवति क्रमशो
मृतजनविषये जीवन्नृणाम्॥

९८.अन्याय्यकरणतः प्राक्छान्तेर्
अन्याय्येच्छौ वर उपदेशः।
अपमानितेषु जनेषु शमगीर्
नीचानां कृत्यं नार्याणाम्॥

९९.भूरिधनाढ्या यद् दुष्टा इति,
यच्च दरिद्राः साध्वीशा इति।
प्रवचनमुभयं गप्यं, लोके
सन्त्युभयकोटिका उभयेऽपि॥

१००.नीडं द्रढयितुमेके श्राम्यन्त्य्
अण्डस्य केचिदपहृतिनिरताः।
मधुरं कूजन्त्यन्ये प्रीत्या
विहगा मनुजा इव वर्तन्ते॥

१०१.सुजनत्वेन प्रथिताः केचिद्
भूरितरं क्रीडन्ति विचित्रम्।
नीचानां हस्तान् गृह्णन्ति
क्रुध्यन्ति च कृतसत्कार्येभ्यः॥

१०२.व्यवहारचणा अप्यलसा गृह-
कार्ये सृजन्ति कुटुम्बरोषम्।
गृहकार्यचणा अपि ये व्यवहृति-
विधुरास्तृणाय ते वसुधायाम्॥

१०३.सन्तः क्षाम्यन्त्यपराद्धानिति
मन्त्वनुवर्तनहेतुर्नैतत्।
पूर्णेऽप्यम्भस्यस्थगितायां
वृष्टौ, भज्यत एव तटाकः॥

मन्तोः= अपराधस्य, अनुवर्तने हेतुः।

१०४.धीःक्षोभायेदं यच्छायां
शीतत्वं च ददाना वृक्षाः।
छिद्यन्ते यैस्तेषां नयनाद्
एकोऽपि नाश्रुबिन्दुः पतति॥

१०५.जलसंतरणक्रीडापाटव-
मिभ ! ते कस्मै पुरुषार्थाय ?
येनानवधानतया पङ्के
संप्रति लग्नः क्रोशस्युच्चैः॥

१०६.अनेकता द्रुमशाखानामिव
मूलानामप्यनेकताऽस्ति।
तद्वददृश्यानां नानात्वं
यद्वद् दृश्यानां नानात्वम्॥

१०७.पामरकविभिः किमपि क्रियतां
श्रीलाश्लीलेऽपरिगणयद्भिः।
तदसह्यं देवतास्तवेषु
क्रियतेऽश्लीलं भक्तैरपि यत्॥

१०८.अकृतध्यानैर्वेदान्तार्थ-
प्रवचनपरपाण्डित्यप्रायैः।
जनताकर्षणनिपुणैर्मनुजै
ऋषयो नीता हास्यास्पदताम्॥

१०९.यो रोचयते बन्धुभिरनिशं
मिलनं स जनो न भवति योगी।
प्रतिदिनमपि यः कुरुते भोजन-
मुपवासी किं स जनो भवति ?॥

११०.वाल्मीकिव्यासपराशराश्च
यद्वा तद्वा त्वया विरचितात्।
विपर्ययात्तद्विहितकथासु
प्रभूतदुःखा रुदन्ति कुकवे !॥

१११.कामं शतकोटिमितं वस्तु
स्त्रष्टुं साहित्यं सुप्रापम्।
तथापि केचित् कवयः किमिति
प्रभ्रंशयन्ति वाल्मीकीयम् ?॥

११२. पूर्वं प्रायः कुटुम्बकलहा
अप्रतिभूभिः पुरुषैर्जाताः।
किन्त्वद्यत्वे तत्रारभन्त
आरभटीं हेतवो बहुविधाः॥

अ-प्रतिभूभिः=
Irresponsible

११३.कोपिष्ठो वेदान्तज्ञानी
सिद्ध्या हीनस्तन्त्रविपश्चित्।
रोगी योगागमसंशोधक
एते विडम्बनाः शास्त्रीयाः॥

योगागमः=
योगशास्त्रम्।

११४.पृथिवीं परितो वायुस्तदुपरि
नभोऽत ऊर्ध्वं चन्द्रो ग्रहाश्च ।
ततो रविस्तदुपरि भान्यथ किं
ध्याय सदा त्वं योगिन्नेतत्॥

११५.परोपकारोऽस्माकं भूम्यां
निवासहेतोर्देयं शुल्कम्।
नैष स्वभुजास्फालनहेतुस्
ते चोरा ये यच्छन्ति न तम्॥

११६.सुमनस्यासीनस्त्वं पश्यसि
मकरन्दं पक्षाढ्य, भ्रमर !।
पश्यति गौली त्वां च क्षुधिता
प्रत्युत्पन्नां मतिमदधानम्॥

सुमनसि= पुष्पे।
गौली= Lizard

११७.खलैः कदाचित् प्रसार्यते कर
आर्येषु स्खलितेषु क्ष्मायाम्।
कदाचिदार्याः परेषु बाष्पा-
कुलेषु घघन्ति कृतकरतालाः॥

घघन्ति = हसन्ति ।घघ हसने।

११८.किं संशोधनपदाभिलप्यं
शवदुर्गन्धघ्राणनकर्म ?।
प्रफुल्लपुष्पसुगन्धघ्राणन-
मपि संशोधनमार्यैरुक्तम्॥

११९.चर्वितचर्वण-तल्लग्न-पुच्छ-
शृङ्गाः सम्पत् प्रतनकृतीनाम्।
जीवननानात्वं मितिरहितं
स्पन्दं करोति नवरचनासु॥

१२०.दम्पत्योः कलहो भूयाद् यः
पश्चात्तापोद्भवाश्रुफलकः।
न स यो घोररणोद्भवरुधिर-
स्रावफलक इति सुनृणामाशीः॥

१२१.उच्चैर्द्राङ्क्षद्दर्दभमेले
कोकिलवाचः श्रूयन्ते किम् ?।
कश्मलनिबिडे कर्दमराशौ
मुक्तामणयो राजन्ते किम् ?॥

१२२.व्यवहारे कुतुकं फलविषयक-
माप्नोतु जन्म धियि सर्वेषाम्।
गाढाध्यात्मिकसाधनसमये
तत् किन्तु भवतु मूलविषयकम्॥

१२३.कदाचिदप्रार्थितमपि हस्ते
पतितं फलमाश्चर्यं तनुते।
कदाप्यचिन्तितमप्यश्म शिरसि
पतितं सृजति क्षतिं गभीराम्॥

१२४.कस्मिन् कस्मिन् विषये ज्ञानं
तव नास्तीति ज्ञानं तेऽस्तु।
अपमानयसि न येन विशेष-
ज्ञान्, आप्नोषि च नम्रं भावम्॥

१२५.मधुरं कर्णाटकसङ्गीतं
यद्यपि मह्यं रोचत एव।
तथापि मृदङ्गडोलुकृते यत्
पशुहत्या तद् दुःखाय मम॥

डोलु=
नागस्वरवादनकाले
ताड्यमानं
वाद्यम्।

१२६.सुतं सुतामपि गृहकृत्यं यौ
शिक्षयतो न - रिपू तौ पितरौ।
न विश्वविद्यालयीयविद्या-
दापनतः पितरौ सुतमित्रे॥

१२७.सर्वान् गमकान् अ-भङ्ग-लेशं
निःसारयितुं वाद्यं यदलम्।
नागस्वरस्य तस्यादिजनक !
तुभ्यं प्रणामसाहस्री मे॥

यत्+अलम्= समर्थम्। नागस्वर इत्येव शुद्धमभिधानं न पुनर्नादस्वर इति।

१२८.रोगा दैहिकदौर्बल्यमथ च
सर्वे फलविकला आरम्भाः।
योगाभासं तव घोषयन्ति
योगाभ्यासं यं ख्यापयसि॥

१२९.साधनकाले ध्येयत्वलेश-
हीना आकृतयो दृश्यन्ते।
ता लीयन्ते मन्दं मन्दं
स्फुरति च शान्तिर्मन्दं मन्दम्॥

१३०.योगग्रन्थानां पठनमधिक-
मधिकं च योगवाचां श्रवणम्।
योगाध्वनि दृषदां राशिर्यत्
कथयन्त्यज्ञाः सुमशय्येति॥

दृषदां=प्रस्तराणाम्। योगाभ्यासो मुख्यो न पुनर्योगग्रन्थपठन-तच्छास्त्रश्रवणादिः।

१३१.भगवन् ! कमपि वरं नः प्रयच्छ
येन रिपूणामपि न भवेन्नः।
कृतास्मदुपकृतिशतजनमन्तू-
द्घोषणरूपो धर्मक्लेशः॥

मन्तु(अपराध)+उद्घोषणरूपः। धर्मक्लेशः= धर्मसंकटम्।

१३२.अतिस्फुटमेव दृश्यं नाना-
हेतोः कदाप्यदृश्यं भवति।
तद्वददृश्यं बहुविधसाधन-
हेतोर्बाढं दृश्यं भवतु॥

१३३.निन्द्ये कर्मणि यद्येकवार-
मवलम्बनमसि नीचस्य त्वम्।
तस्मिन् कर्मणि निर्बध्नाति
त्वां भूयोऽसौ जागृहि जागृहि॥

१३४.निजरुच्या शिक्षितसंगीतेष्व्
अपि संगीतकविचक्षणेष्वपि।
न भवन्त्यधमो मध्यम उत्तम
इतिरूपाः किं स्तरा अनेके ?॥

संगीतकम्= Music performance

१३५.संशोधकत्वकीर्तिं लिप्सुः
संशोधनं स्वयं विदधीत।
अन्यधनानपहारीवान्य-
श्रमफलचौर्याकारी विद्वान्॥

१३६.विदुषां कृपया कर्णे पतितैर्
द्वित्रैः शब्दैर्यावज्जीवम्।
अभ्यनयं सार्वज्ञ्यं संप्रति
पश्यामि स्मितवदनं कालम्॥

१३७.ग्रन्थारचनं, मुग्धाग्रे द्राग्
आरभटी त्रिचतुःश्लोकानाम्।
आक्रोशादज्ञाननिगूहन-
मेतेऽध्वानोऽनार्यगुरूणाम्॥

१३८.‘प्रतिवेशिगृहीयान् दशतु जनान्
सर्पो न मां तदवने निरतम्’।
इति चिन्तयता सदृशो मूर्खो
नान्योऽस्ति भोगिनं वर्धयता॥

तस्य अवने=रक्षणे।
भोगिनं=सर्पम्।

१३९.यो वामनोऽभवत् पूर्वं स
त्रिविक्रमोऽभवदद्भुतमेतत्।
त्रिविक्रमाः सन्तो यत् केचिद्
दधते वामनतां शोच्यं तत्॥

१४०.“ पतति कदा मम जाले कीटः ?
कदा तदीयं चूषामि रसम् ? ”।
इत्याधिस्ते किमूर्णनाभे !
सततं जागर्ति न मस्तिष्के ?॥

पुंस्याधिर्मानसी व्यथा इत्यमरः।

१४१. ‘तस्मिन्ननुष्ठिते तत् फल’मित्य्
‘एतस्मिंश्चानुष्ठित एतत्।
फल’मिति नानानुष्ठानैर्मम
समाप्तमायुः, प्राप्तं न फलम्॥

१४२.अरोगदृढकाया अभवन् ये
मात्सर्याय नृणामपरेषाम्।
तैः कालेनाकस्माद् गिलितैः
किं सन्दिष्टमिति ध्यातव्यम्॥

१४३.जीवामि जगत्यामहमस्यां
कस्माद् हेतोर्नाहं जाने।
केचिद् वयसा मत्पुत्रसमा
वैवस्वतस्य भुवनमगच्छन्॥

१४४.हसनं, हसनाभिनयो, रोदन-
मथ रोदनाभिनय -इत्येवम्।
सामग्रीभिश्चतसृभिराभिर्
जीवनसंज्ञं रचितं वास्तु॥

१४५.पश्यसि न विश्वविद्यानिलये
किमनार्यैर्विद्यायाः पीडाम् ?।
भगवन्, कृपानिधे ! तदुपेक्षां
हिंसां न मन्यसे किं घोराम् ?॥

१४६.तव भाषाया अज्ञातत्वात्
त्वं यत् कूजसि तत्र विहङ्गम !।
गाढः प्रेमा रोष उतोग्रः
स्यादिति न प्रत्यभिजानीमः॥

१४७.दन्तैर्नखैश्च भाययसि त्वं
कपे ! मनुष्यान् नगरे निवसन्।
विद्युत्तन्त्रीस्पर्शनसमये
त्वां रक्षन्ति न दन्ता न नखाः॥

१४८.परोपकारो निजापकारो
भवति कदाचिज्जागृहि सुमते !।
अन्यजने मङ्गलकरणात् प्राक्
सहस्रवारं चिन्तय सम्यक्॥

१४९.अध्वद्रुतधावननिपुणोऽपि
स्खलति जनः कस्मिंश्चित् समये।
शाखाविलासविज्ञोऽपि यथा
शाखामृगः कदाचित् पतति॥ शाखामृगः=कपिः।

१५०.पादप ! तिष्ठसि दार्ढ्येन त्वं
पतितेष्वपि पर्णेषु समेषु।
यो जानीषे पर्णानि त्वयि
नवानि समुद्भविष्यन्तीति॥

समेषु=सर्वेषु।

१५१.'विटपिनि कृतनीडः खग' इति कः
खगलक्षणमभिहितवान् प्राज्ञः ?।
गुल्मगिरिदरीकच्छेषु रचित-
नीडानां किं नास्ति खगत्वम् ?।

विटपिनि=वृक्षे। प्राज्ञः=विपरीत-लक्षणया मूर्खः। कच्छः=जलप्राया भूमिः।

१५२.अस्मिन् काकैर्निबिडे वृक्षे
धृतपिकवेषः काको नेता।
इह सहृदय ! ते कोऽमृतबिन्दून्
सिञ्चतु कर्णे ? याह्यन्यत्र॥

१५३. चीत्कारं मुञ्चद्भ्यः किमिति
क्रुध्यसि हरिण ! प्लवङ्गमेभ्यः ?।
ये पश्यन्तो नक्रं के त्वां
जलं पिपासुं जागरयन्ति॥

प्लवङ्गमेभ्यः=कपिभ्यः। के=जले। कं शिरोऽम्बुनोः इत्यमरः।

१५४.पुनः पुनः संविदलीका, गीः
परुषा, खण्डनमन्योक्तीनाम्।
एतत् सर्वं गाढाया अपि
मैत्र्याः क्रशिमानं विरचयति ॥

संवित्=प्रतिज्ञानम्।

१५५.'क्रोशति किमसौ ?' 'गर्जति किमयं ?'
'कस्योक्तीः काः को ध्वंसयति ?।'
इति चिन्ताभिः समाप्तमायुर्
न शास्त्रनिर्णयलेशः प्राप्तः॥

१५६.नावश्यका नरान् भाययितुं
व्याघ्रा वा सिंहा वा घोराः।
गावोऽलं तत् कर्तुं बलिनो,
ये दैवान्न मनुष्याहाराः ॥

१५७.क्षुधया 'म्याव् म्याव्' इति विदधासि
क्षीरे दत्ते नैव स्पृशसि।
तव मार्जाल ! विचित्रं वर्तन-
मवैतु क इति त्वमेव शंस॥

१५८.'अभविष्यन् यदि नैते विघ्ना
अकरिष्यमहं जगतीं भव्याम्'।
कत्थस इत्थं, यल्लब्धं तत्
किमुपायोजय ? एतद् ब्रूहि॥

कत्थ श्लाघायाम्। किम् उपायोजयः = उपयोगम् अकरोः किम् ?

१५९.त्यक्तावेशक्रोधद्वेषे
हृदये चित्तं विश्रमयसि चेत्।
ग्राह्यं किमिति त्याज्यं किमिति
ज्ञानं परिशुद्धं प्राप्नोषि॥

१६०.द्वावपि चलतां केवलमवनौ
तव पादौ यावनधिकशक्ती।
किं तत्रैव मनस्ते लग्नं ?-
यत् क्षममाक्रान्तुं ग्रहताराः॥

यौ+अनधिक-शक्ती इति च्छेदः। किं= किमर्थम् ?

१६१.नीडं निर्मातुं विहग सखे !
माऽऽश्रय यामपि कामपि शाखाम्।
गुणैः प्रकृष्टां दृढनिबिडदुरा-
रोहत्वादिभिरन्वेषस्व॥

१६२.भूयोभूयोवैद्यदिदृक्षा-
रोगो भिषज्यते यैर्वैद्यैः।
वास्तविकं वैद्यत्वं तेषां
नान्येषां नाम्ना वैद्यानाम्॥

१६३.वेणोश्छिन्नः कश्चन भागो
निर्मितरन्ध्रस्तव वर्ष्मश्रीः।
तथाऽप्यनिन्दत् स्वं दौर्भाग्यं
त्वं वेणुवाद्य ! मधुरं वदसि॥

वर्ष्म=शरीरम्।हे वेणुवाद्य !सरन्ध्रो वेणुभाग एव तव देहसंपत्।

१६४.विचारनामकविकारनिबिडे
मस्तिष्के सज्जते न तत्त्वम्।
मस्तिष्काख्यगृहं सम्मार्जय
लिम्प ततो तत्त्वाख्यान् वर्णान्॥

१६५.शङ्ख ध्मामि ध्वानं तज्जं
कर्णे वृष्टां प्रस्तरधाराम्।
मन्यन्तां केऽपि ; सुधाधाराम्
अवयन्तु केऽपि ; नास्मि प्रतिभूः ॥

ध्वानं=ध्वनिम्।

अवयन्तु=जानन्तु।
प्रतिभूः=
Responsible

१६६.'ममैव कष्टं ब्रह्माण्डति मयि,
वहानि किमपरमस्तकशूलम्।?'
एवं सर्वे यदि चिन्तयन्ति
पश्यामो भुवि केवलमश्रु॥

ब्रह्माण्डति=
ब्रह्माणडमिवा-
चरति।क्विप्।
वहानि=
वहतेर्लोट् उ.ए.

१६७.निन्दसि कुन्तीं कर्णं याऽत्यजद्
अथ दुर्वासाः किं स्तुत्यस्ते ?
कुमारिकायै मुग्धायै यो
मन्त्रानददात् सन्तानार्थान्॥

१६८.केषाञ्चन रुक् :- कर्तितपरवाक्
त्रिचतुरवाक्यश्रवणानु द्राक्।
कस्मिन्नपि विषये काऽप्युक्तिर् ;
धन्वन्तरिरपि न चिकित्सति याम्॥

रुक्=रोगः। उक्तिः= Statement

१६९. अप्राप्तेऽभीष्टे न विषादः
प्राप्तेऽभीष्टे न च सन्तोषः।
न योगिनामेवैतल्लक्षणम्
अतिजडिमवतामपि लक्ष्मैतत्॥

लक्ष्म=लक्षणम्।

१७०.अस्माकं मित्राणि कदाचित्
समयं नः कबलीकुर्वन्ति।
कृतधर्मसंकटैरर्थलेश-
शून्यव्याहारैरपलापैः॥

१७१.सुजनत्वं स्वं ख्यापयितुं ये
कुजनान् स्तुवन्ति साधुमणीनिव।
दिवसे कस्मिंश्चन ते मूर्खाः
पश्चात्तापाग्नौ दह्यन्ते॥

१७२.नरा विनष्टग्रन्थज्ञानाः
स्तुत्या ; ये स्वकलाभिः प्रथिताः।
द्रुमाः पतितपर्णाः श्लाघ्या ; ये
सुममञ्जरीभिरतीव रुचिराः॥

१७३.उत्कृष्टं भाषन्ते केचित्
केचन सम्यग् रचयन्ति कृतीः।
उभयत्रोभयमतिविरलं ; यदि
नैतस्मिन् तत् , तस्मिन्नैतत्॥

१७४.अद्य विहङ्गशिशो ! प्रथमवार-
मुदघाटयः स्वपक्षौ द्वावपि।
अद्यैव कथं बुभूषसि त्वं
डयनाचार्यः परविहागानाम् ?॥

१७५.'संशोधनसंस्थासु प्रवचन-
कर्मण एव प्राधान्यं स्यात्।'
इति ये प्रतिपादयन्ति नूनं
तेऽनर्हा अलसा मूर्खा वा॥

प्रवचनप्राधान्य-
प्रतिपादनं
संशोधन-
व्यवच्छेदार्थम्।

१७६.कण्ठेनिहितैर्द्वित्रैः श्लोकैर्
आचार्यत्वप्राप्तिरभिनवे।
काले रोगः प्रायिक एतं
कीदृग् धन्वन्तरिर्भिषज्यतु ?॥

१७७.कूजसि न खग ! द्रुमशाखायां
यावत् तावत् परविहगेषु।
आदेशं 'कूजते'ति कर्तुं
न योग्यता ते सिद्ध्यति, गर्विन् !॥

१७८.हर्षः सहस्रभेदो वा, शुक्
कोटिभिदाभिन्ना वा स्यान्नः।
विषये कस्मिन्नपि या सिद्धिः
साऽस्मज्जीवनसाफल्याय॥

१७९.मृदुहृदयानामुपविश्य शिरसि
बहुधर्मसंकटग्रस्तानाम्।
तैः कारयितृषु निजकार्याणि
प्रथिता आर्या अपि- बत, सन्ति॥

१८०.'परोपकारिस्फुरन्मणय' इति
नुता विटपिनः सुभाषितेषु।
यत्कर्तारो चन्दनमन्या-
हारापहारिणं न विदन्ति॥

चन्दनवृक्षः स्व-मूलैरन्यवृक्षमूला-न्याक्रमय्य तदा-हारं कबलीकरो-तीति नवीनविज्ञानिनः। नुताः=स्तुताः।

१८१.'गिरिशृङ्गस्थोऽवरुह्य रासभ
इह मां तलस्थमश्वं पश्येत्।'
इति माऽभिलषाग्रे रासभस्य
रासभ एवाश्वीयति तुरग !॥

मा+अभिलष। रासभस्य अग्रे रासभ एव अश्वीयति =अश्व इवाचरति।

१८२.ऋषयः कालातीतं देशा-
तीतं च ददृशुरिति किं मानम् ?।
तद्दर्शितपथपथिका देशा-
धीनाः कालाधीनाश्चैव॥

इति=इत्यत्र। मानं=प्रमाणम्।

१८३.अवने !काग्ने !वायो !ख !युष्म-
दन्तस्तत्त्वं मम दर्शयत।
शब्दशलाकादध्यात्मशास्त्र-
कारागारान्मुच्ये येन॥

क=जल!+अग्ने! ख=आकाश!

१८४.ये यत्र प्रावीण्ययुजस्ते
तत्र प्रमादिनोऽपि कदाचित्।
व्यादत्तचुञ्चवो विहगाः किं
न स्खालयन्ति कदापि मीनान् ?॥

१८५.अग्रेऽन्येषामस्मत्कष्ट-
ज्ञापनविषये ज्ञातव्यमदः।
औदासीन्य-प्रत्युपदेशन-
साहाय्यानां फलमन्यतमत्॥

ज्ञातव्यम्+अदः= एतत्।

१८६.'अह'मिति यन्निर्विरति स्फुरति
ज्ञाने जाते तन्मूलस्य।
सर्वेऽप्याध्यात्मिकशास्त्रार्था
बाढं समाप्नुवन्ति समाप्तिम्॥

यत्+निर्विरति= निर्विरामम्।

१८७.दृष्टापरगजकङ्काल, गज !
ध्यायसि जीवनमृतिविषये किम्?।
उत रचयन्त्याध्यात्मविचारास्
त्वन्मानसमानसकल्लोलान्॥

कङ्कालः=अस्थि-पञ्जरः। मानस-मानसकल्लोलान्= मनोरूपे मानस-सरोवरे तरङ्गान्।

१८८.चिन्तितशरदृतुबहुकष्टेन
ग्रीष्मे सञ्चितसुमबीजेन।
हे, चमरपुच्छ ! न चिन्तितः किं
सञ्चितवस्तुस्तेनस्त्वयका ?॥

स्तेनः=चोरः। त्वयका=त्वया।

१८९.अधिकारिजन ! त्वया विरचितां
काकस्य नुतिमसह्यामपि मे।
श्लाघे सशिरःकम्पं यस्मात्
पिकोऽस्मि, नैवास्म्यधिकारिजनः॥

१९०.जना जगत्यामभीतिमन्तो
न रासभं सैन्धवं वदन्ति।
जना जगत्यामधैर्यवन्तो
न रासभं रासभं गदन्ति॥

सैन्धवं=अश्वम्।

गदन्ति=स्पष्टं वदन्ति। गद व्यक्तायां वाचि।

१९१.आम्र ! त्वयि धगधगायमानां
निर्वापय मात्सर्यज्वालाम्।
वृक्षा अपरे सन्तु सुमाढ्या
भवितासि फलाढ्यस्त्वं नचिरात्॥

१९२.सलिलं यदि याचसे तटाक !
क्व याम किं वा करवाम वयम् ? ।
यदि पनसो भिक्षते फलानि
प्लवगाः किं कुर्वन्तु वराकाः ?॥ प्लवगाः=कपयः।

१९३.ह्यो मम जन्माभवदद्य मृत्युर्
एतद्दिनयोर्यद् घटितं तत्।
अनुभूतचिन्तितादि समस्तं
जीवनमित्यभिहितं मयैव॥

१९४.कारितकतिचित्स्मित!कारितकति-
पयरोदन ! 'कति लब्धत्यक्ते'?।
इति गणनायाः समयोऽपगतो
मनुज ! समाप्ता स्थितिरवनौ ते॥

१९५.सूक्ष्मस्थूलग्रन्थिमृदुत्व-
प्रभृतिगतिरोधधर्मयुता अपि।
शाखा रथ्या इव ते प्लवग ! प्लवग!=हे कपे !
ग्रहणे दार्ढ्याल्लाघवतश्च।

१९६.त्वन्मस्तिष्काभिधशास्त्रस्य
ज्ञानं यावन्न प्राप्नोषि।
तावच्छास्त्रव्याहारास्ते शास्त्रव्याहाराः=
पन्थानः पथिकस्याज्ञाताः ॥ शास्त्रोक्तयः।

१९७.'मृदुलः सुजनः','परुषो दुर्जन'
इति परिगणना बाढमसाध्वी।
मधुमेहाधिक्याय सिता स्यात् सिता=शर्करा।
परमौषधाय शुण्ठी च भवेत्॥

१९८.दृष्टस्वजनो निःसृतभषणो ;
दृष्टपरजनः कम्पितपुच्छः।
इत्थंलक्षणयुक्तो भषकः — भषकः=श्वा।
पाल्यो नैव गृहे केनापि॥

१९९.किमपि न शास्त्रं किमपि न दैवं
कापि न नीतिः शमयति शोकम्।
प्रेष्ठे जने कृतान्तिमयाने
नानास्मरणनिरन्तरजनके॥

२००.तव पक्षौ द्वौ स्त इति स्मरणं
पक्षिन् ! किं तव संप्रति नास्ति ?।
येनोपविशसि कान्तां ध्यायन्
क्रुद्धा ते याऽडयतान्यत्र॥

२०१.यान् खात् पतितान् देवान्मत्वा — खात्=आकाशात्।
सुमनोभिस्तत्पादान् आर्चम्।
मधुरालापास्ते मम पादाव्
अकर्तयन् क्रकचेन शितेन॥

२०२.यान्निरयादुद्गतान् पिशाचान् — निरयत्=नरकात्।
मत्वाऽताडयमश्मभिरुग्रम्।
मम शीर्षमभ्यषिञ्चन्नाशु
स्वर्गङ्गाजलधाराभिस्ते॥

२०३.‘ अप्रार्थितमपि करणीयं किं ? ’
‘ प्रार्थितमपि करणीयं किं न ? ’।
एवम्भूतविवेचनहीना
भूयो भूयो बहु शोचन्ति॥

२०४.अधुना त्वय्येकमपि न पर्णं
द्रुम ! यत् तन्न शुचस्ते हेतुः।
द्रष्टासि त्वं छायायां ते
विश्रान्तान् अध्वन्यान् नचिरात्॥

अध्वन्यान्=पथिकान्।

२०५.अभवन्त्यामावश्यकातायाम्
अपि वर्षणमुपदेशोक्तीनाम्।
रोगः केषाञ्चन ; यद्विषये
वैद्या भजन्ति तूष्णींभावम्॥

द्वयसं=परिमाणम्।
प्रगतौ॥ सत्सप्तमी।
विगतिः=प्रगति
विरुद्धा गतिः।
पक्षौ=पक्षिणः
पक्षौ। लषतोः
सतोर्भुजयोः।
सत्सप्तमी। च+
आकृष्टा+एतर्हि=
अधुना।

२०६.द्वि-पद-द्वयसायां प्रगतौ मे
झटिति शत-पद-द्वयसा विगतिः।
पक्षौ भवितुं लषतोर्भुजयोर्
अध आकर्षति नक्रो गृह्णन्॥

२०७.केशाः कृष्टाः प्राङ् नवनीते
छुरिका चाकृष्टैतर्हि गले ।
विश्वस्तस्योभयथाक्रीडा
दृष्टा ; भगवन् ! को विश्वास्यः ? ॥

२०८.वृष्टिर्नाब्बिन्दोरपि वर्षा-
काले ; शिशिरे घर्माधिक्यम्।
हन्ताद्यत्वे कदा क ऋतुरिति
पञ्चाङ्गग्रन्थाद् विज्ञेयम्॥

न+ अप्(जल)-
बिन्दोरपि। अपः
नदीजलमर्थः।
अत्र जलसामान्या
र्थेऽस्याः प्रयोगः।

२०९.अद्यश्वीने मृत्यावपि सति
मयि गन्धोऽपि न वैराग्यस्य।
‘अमुकार्थाय प्रयतनममुकं
करणीय’मिति स्पृहयति हृदयम्॥

अद्यश्वीने=अद्य वा
श्वो वा संभवति।
आसन्ने सति।

२१०.हंसं स्तुवन्ति निन्दन्ति च बकम्
आकृतिहेतोः संस्कृतकवयः।
उभयोर्जीवज्झषकबलीकृति-
हिंसाकारित्वे सदृशेऽपि॥

झषः=मीनः।

२११.कालिकसंबन्धावच्छिन्नाः
सर्वे दृश्यपदार्थाः सन्तु।
किं न तदनवच्छिन्नं किमपि
ध्यायन् योगिजनः पूज्यो नः ?॥

२१२.'दृढतरलग्नं शारीरकीय-
भाष्यं गलबिल' इति गर्वो मे।
किन्त्वाध्यात्मिकजिज्ञासवस्तु
यान्त्यपरान् , न च मामायान्ति॥

२१३.अभिनव-वैद्यागम-विज्ञत्वं
दिदर्शयिषवो जनाः कतिपये।
श्रोतृजनानां समयं गिलन्ति
वैद्यक-बोधलवेन विहीनाः॥

अभिनव(नवीन) वैद्यागमः=वैद्य-शास्त्रम्। वैद्यकम्=वैद्यशास्त्रम्।

२१४.अपिहितवदनो मूढतमाग्रे
क्रोष्टॄणां क्रोशतामसह्यम्।
किं कण्ठीरव ! गर्जस्यधुना
काष्ठाकुड्याश्मनां पुरस्तात् ?॥

अपिहितवदनः=अनुद्घाटितमुखः। हे मूढतम ! + अग्रे। क्रोष्टॄणाम्=शृगालानाम्।

२१५.मा भ्रमर ! सुमं त्वरया डयस्व
गन्धं जिघ्रन् मकरन्देच्छो !।
सुम-सम-वर्णो यत्रोर्णनाभि-
रुपविष्टोऽस्ति ग्रथिते जाले॥

२१६.तव तस्यापि द्वौ पक्षौ ; तव
तस्याप्येका चञ्चूरिति ते।
पक्षिन् ! पक्षी स न विश्वास्यः ;
स्वान्तं तवेव किं तस्यापि ?॥

२१७.'आसीदेवं करणीयं मम '
' नासीदेवं करणीयं मम। '
पश्चात्तापेनेत्थं कृतेन
घटितं यत् तत् किमघटितं स्यात् ?॥

२१८.खग ! तव नीडं यावच्छिथिलं
न भवति तावत् तद् द्रढयारम्।
प्रबले वाते तच्चिह्नलवोऽ-
प्यवशिष्यत इति को विश्वासः ?॥

द्रढय=दृढीकुरु।
अरम्=शीघ्रम्।

२१९.मूर्ख, मयूर ! व्याघ्रे वर्णिल-
पट्टीर्दृष्ट्वा मोहं मा गाः।
दंष्ट्रा अप्यवलोकय या दृढ-
निशितत्वोभयधर्मक्रूराः॥

२२०.प्रेम्णा पालय कियताऽपि पशून्
वन्यान् ; किन्त्वेतन्मा विस्मर।
वन्याः पशवो वन्या एव
स्पष्टमिदं ते गृह्या नैव॥

२२१.यदि न्यषेधिष्यो धर्मशास्त्र !
न दिवास्वप्नं ; साध्वभविष्यत्।
अदिदृक्षन् ये स्वप्नान् दिवैव
त एव साधितविविधध्येयाः॥

नि+अषेधिष्यः=
निषेधं नाकरिष्यः
लृङ्।म.पु.ए.
अदिदृक्षन्=
द्रष्टुमैच्छन्।सन्
लङ् च।

२२२.मया परेषामन्यैर्मम च
क्लेशो मा भूदिति चिन्तनेऽपि।
तदपि कदाप्येतदपि कदापि
द्वन्द्वाय भवति ; जीवनमेतत्॥

द्वन्द्वं=युद्धम्।

२२३.मत्वा दृढां शिलां यत्राहं
पदं न्यधां तत्रासीद् गर्तः।
शिलीयवर्णसदृग्वर्णाक्तं
वस्त्रं यस्याच्छादकमासीत्॥

२२४.ज्वालामालां निःसारयतो
दर्शनभीकरतो नगवदनात्।
सत्यं समुद्गतेऽप्यमृतोत्से
तद्वार्ता विश्वस्तुमशक्या॥

नगः=पर्वतः।
अमृत+उत्से=
Fountain

२२५.सुमनःसारं चूषितुमयसे
भुजयोरधुना श्रान्तः , किन्तु।
मा स्थगयाले ! डयनं ; नचिराद्
द्रष्टासि सुमं मकरन्दाढ्यम् ॥

सुमनसः पुष्पस्य
सारं= मकरन्दम्।
अयसे=गच्छसि।
स्थगय+अले !=
हे भ्रमर !

२२६.सत्यपि बलवति महति च वर्ष्मणि
सत्यपि शृङ्गद्वन्द्वे निशिते।
नान्यतरदलं तव रक्षणाय
सैरिभ ! सिंहैराक्रान्तस्य॥

वर्ष्मणि= शरीरे।
न+अन्यतरत्+
अलम्=पर्याप्तम्।
सैरिभ= हे महिष!

२२७.‘एवमकुर्वन् एवमकथयन्
अहमप्येवमकरवं तै’रिति।
अश्रुव्यामिश्राण्युद्भवन्ति
जनेषु मृतेषु हा, स्मरणानि॥

२२८.अस्तव्यस्तं क्षिप्ता मणयः
स्वीयं जहति न मणित्वधर्मम्।
रुचिरं योजनहेतोः काचा
न प्राप्नुवन्ति मणित्वधर्मम्॥

रुचिरं=मनोहरं यथा तथा स्थापनात्।

२२९.कोकिल ! न काकिणीमपि यच्छसि
परविहगेभ्यः ; किन्तु सुधां स्वात्।
मुखतो मुञ्चन् अतिमूर्खैस्तैः
स्वाण्डोष्णीकरणं कारयसि॥

२३०.न तव कपे ! किं पर्याप्तं तरु-
शाखा-त्रोटन-कृत्यमरण्ये।
येनैत्य नरैः पूर्णं नगरं
तत्रापि दर्शयसि कापेयम्॥

२३१.'न कुञ्चिकाधर आयाती'ति
त्वं शोचसि ; न च बन्दी त्वमसि।
न तालको वा न शृङ्खला वा
न च कारा वा वर्तन्त इह॥

२३२.पिहितेषु गवाक्षेष्वपि सर्वेष्व्
असांप्रतं ते रोदनमधुना।
प्रकोष्ठगत, भोः ! श्वो वा परश्व
उद्घाट्यतेऽस्य विततं द्वारम्॥

२३३.विश्वसिहि पक्षयोस्ते पक्षिन् !
स्नेहं चावाप्नुहि जलदेन।
यासि किमर्थं कुतुकाड्डिडयिषु-
मेतर्हि डयनविद्याशालाम् ?॥

डिडयिषुः= डयितुमिच्छुः। एतर्हि=अधुना।

२३४.शुद्धं ज्ञानमवाप्स्यं, नाना-
क्लेशानपि नैवान्वभविष्यम्।
यदि विद्यायुर्नाशविधायिनि
न विश्वविद्यानिलयेऽध्यैष्यम्॥

२३५.काकः काके वन्दी भवतात्
तव किं जातं ? कोकिल ! येन।
मुक्ताहारं तेनाद्य त्वं
धारयसि, पतसि तत्पदयोश्च॥

काके=काकविषये। वन्दी तु स्तुति-पाठक इत्यमरः।

२३६.शब्दात् कृमिचलनोत्थात् कम्पे
न स्फूर्जथोस्तु जहामि दार्ढ्यम्।
विचित्रमेतन्मम विषये स्वय-
महं न जाने लवमात्रमपि॥

कम्पे=कम्पमात्मना-ऽनुभवामि। कपि लट् उ.ए.

२३७.दयार्द्रहृदयाः केचिन्मिष्टं
ददति प्रीत्या पिपीलिकायै।
नृणां गर्ते पतितानां ये
प्रसारितान् गृह्णन्ति न हस्तान्॥

२३८. वन्द्याः कदेति, पाड्याः कदेति,
सुमैः सुगन्धिभिरर्च्याः कदेति।
जनाः कदा कथमवलोक्या इति
सदा विवेकस्तव जागर्यात्॥

२३९.मृत्योराह्वानं स्वागमयति
महाशरीरे तिमिङ्गिलेऽपि।
कथमतिसूक्ष्मशरीराः कृमयः
कुर्वन्तु तत्तिरस्कृतिमधुना ?॥

पाड्याः=पादाभ्यां ताडनीयाः। पाड लत्तायामिति मया सृष्टो दशम-गणीयो धातुः। जागर्यात्=जागृ+आशीर्लिङ् प्र.पु.ए. सु+आ+गमयति = स्वागतं कुर्वति सति। सत्सप्तमी।

२४०.‘जीवितसमये द्वित्राण्यकरोत्
कर्माणि वराण्येष जन’ इति।
तव विषये यदि कथयन्ति जनाः
सार्थकमवेहि तव जनुरवनौ॥

जनुः=जन्म।

२४१.पूर्वं घटितं स्मारं स्मारं
भूरिविषादं कुरुषे मनुज !।
आत्माश्रुविषयमथवापराश्रु-
विषयं मानवजन्मन्युदयात्॥

एतदन्यतरहेतुकं विषादमकुर्वाणा मानवत्वधर्म-हीना इति भावः।

२४२.अपरासाधितमणुमात्रमपि
स्वीयं साधय किमपि विशिष्टम्।
मा भूत् किन्तु तदार्यजुगुप्सित-
मथवा हास्यमसम्बद्धं वा ॥

२४३.अन्यधनानां चोरेभ्योऽपि
क्षुद्रतराः परनाम्नां चोराः।
नाम निगूहन्ति स्वं पूर्वे
प्रख्यापयन्ति परं यदपरे॥

नाम्नो निगूहनं विनयादिव। नाम्नः प्रख्यापनं च दम्भादिव। अन्यै र्ग्रन्थान् रचयित्वा तत्कर्तृत्वेन स्वनाम्नः ख्यापनं यत्क्रियते कैश्चित् तदत्र प्रतिपाद्यं वस्तु।

२४४.‘पक्षी सन् डयनार्हो नास्मी’-
त्येवं कुक्कुट ! शोकं मा गाः।
पक्षी संश्चारुतरोऽपि त्वत्
कर्तुं डयनं शक्तो न शिखी॥

शिखी=मयूरः।

२४५.दृश्यानां विविधानां दर्शन-
मपि विविधं यस्यैव विभाति।
द्रष्टुस्तस्य च वैविध्यमदस्-
त्रिपुटीसारो ब्रह्म त्वेकम्॥

अदः=एतत्।

२४६.कमलस्यैकस्योन्मीलनमति-
शोभनमखिला नराः स्तुवन्ति।
तन्मूलनालदलविहितस्य
श्रमस्य को वा कुरुतात् स्मरणम् ?॥

२४७.मुक्तान्वेषणनिरता हंसा
न विश्वविद्यानिलये श्लाघ्याः।
काकाः स्तुत्या येषां श्रुतिकटु
वाचाटत्वं सम्मानाय॥

मुक्ता=मुक्तामणिः।संशोध्यं वस्त्विति यावत्।

२४८.जीवन्मयूर ! रसिकाः केचित्
तव न स्तुवन्ति रुचिरं नृत्यम्।
अग्रे तव ये श्लाघन्तेऽलं
मृतस्य बकस्य शक्तिं डयने॥

२४९.शृणु विस्मृतवर्तमान, हे जन !
चिन्तितभवितव्य, स्मृतभूत :-
तव स्वभावे - गुणाः प्रतिशतं
पञ्चाशद्, दोषाः पञ्चाशत्॥

२५०.अश्लीलार्थैर्व्याप्तं काव्यं
काव्यत्वे सत्यपि न श्लाघ्यम्।
हिक्काकासाभ्यां निबिरीसं
गानमिव सतां नूनमसह्यम्॥

निबिरीसं=निबिडम्।

२५१.भवति ज्ञानं 'भुग्ना नदी'ति
न झषाणां तत्सलिलस्थानाम्।
जागर्त्येतड्डुयमानानां
वृक्षाग्रस्थानामुत वीनाम्।

भुग्ना=वक्रा।झषाणां=मीनानाम्। वीनाम्=पक्षिणाम्। एतद् ज्ञानं= 'वक्रा नदी'ति रूपं जागर्ति।

२५२.चित्रपतङ्गाः ! स्मृतेषु युष्मास्व्
अश्रु स्रवति द्रुतमक्ष्णां नः।
ज्ञात्वा क्रेयान् शोभनपक्षान्
घ्नन्ति धनार्थं युष्मान् नीचाः॥

चित्रपतङ्गाः= Butteflies (Apte's dic tionary)

२५३.तृणनिवहष्टुब्विपिनं यस्मिन्
कीटाश्चलन्ति लघुकपय इव।
तेषां राज्ये तत्रैव महा-
समराः सीमाविवादजन्याः॥

तृणनिवह एव टुप्=लघु विपिनं =काननम्। टुप्टीका स्मर्यताम्।

२५४.'तत् कर्तव्यमदः कर्तव्यं
हस्तेन गिरिर्ध्वस्तव्य' इति।
समये कस्मिंश्चिदगर्जमहं
संप्रति दण्डमपेक्षे स्थातुम्॥

कर्तव्यम्+ अदः=एतत्।

२५५.खग ! शाखाः का इति, प्रशाखाः
का इति कियच्चिरं शोधयसि ?।
शीघ्रं निर्धारय कामपि, विभि-
रपरैः कुलायरचनाऽऽरब्धा॥

विभिः= पक्षिभिः। कुलायः=नीडम्।

२५६.ज्ञानोत्कृष्टानपि, तद्ज्ञाते
विषये वर्षद्भाषणधारः।
स्थितान् पुरस्ताद् बालान् गणयन्
गृह्यान्न जनः कानपि सुजनान्॥

ज्ञानोत्कृष्टान् प्रति।तानुद्दिश्येति यावत्।न गृह्यात्- आशीरियम्। तस्मादाशीर्लिङ्।

२५७.द्वित्रैर्दिवसैरस्मज्जीवितम्
आप्नोत्यन्तं, तदनु पृथिव्याम्।
द्वित्रान् दिवसान् जीवद्भिर्नः
स्मृते चरित्रे तद्भाग्यं नः॥

जीवद्भिः जनैः नः=अस्माकं चरित्रे स्मृते।

२५८.निर्जितदुःशासनदुर्योधन-
दशवदनाः सांप्रतिके काले।
निर्जितभारतरामायणानि
निम्नकथावस्तूनि सृजन्ति॥

२५९.अ-कवे ! गर्वं मोद्वह कथमपि
निजभक्त्या सौन्दर्यलहर्याम्।
सप्तदशे पद्ये यत् कथितं
तत्र, तदस्ति त्वयि किं ? वद मे॥

मा+उद्वह। सौन्दर्यलहर्याः सप्तदशपद्ये वशिन्यादिसमेताया भगवत्या ध्यानस्य फलं कवित्व-शक्त्युत्पत्ति-रित्युक्तम्।

२६०.हिमालयोपरि डयमानान् अव-
धीरितमेघान् हंसान् पश्य।
येषां हृदये न समाधानं ;
श्येनैर्गृध्रैरपि ये दृष्टाः॥

२६१.अण्डाद् बहिरागत नक्रशिशो !
जीवसि वञ्चित-बक-चञ्चू-कः।
त्वदधीनोऽपि भविष्यति कालस्
त्वत् खड्गिनोऽपि बिभ्यति यत्र॥

त्वत्=तव हेतोः। पञ्चमी।

२६२.केचिद् विहगाः क्रीडन्तः खे
स्वपक्षपाण्डित्ये धृतमौनाः।
केचित् पशवो भुवि स्खलन्तो
डयनेषु शिशिक्षन्ते विहगान्॥

खे=आकाशे। स्वपक्षयोः पाण्डित्यविषये।

शिशिक्षन्ते= शिक्षितुमिच्छन्ति।

२६३.न कण्टके कुसुमत्वं वर्तत
एवं जानन्तोऽपि सदा ये।
कण्टकमेवाभिदधति कुसुमं
ते बालिशाः , कदाऽपि न सुजनाः॥

२६४.मूषिक ! गृध्रानपि खेलयतः
स्वं तच्चञ्च्वाः कथमप्यवतः।
गिरिगर्तेषु च शीघ्रं चलतः
श्रद्धा श्लाघ्या प्राणेषु तव॥

अवतः=रक्षतः।अव रक्षणे+शतृ।ष.ए

२६५.आदौ मानसमानसभङ्गाः
स्मृत्युद्भवानि दृश्यानि ततः।
नानारेखास्तदनन्तरं च
शान्तिरिति मम ध्यानेऽनुभवाः॥

मानसरूपे मानससरोवरे भङ्गाः=तरङ्गाः।

२६६.ध्यानात् पूर्वं यथाऽहमासं
ध्यानानु तथैवास्म्यविशेषात्।
अरविन्दविवेकानन्दादय
ईक्षन्तां मां सकृपापाङ्गाः॥

२६७.अमुकानां ध्यानेनामुकमनु-
भूतमिति कथाः कर्णे पतिताः।
मम तु ध्याने खातीतस्य
ज्ञानं कस्याप्युदभून्नैव॥

खं=इन्द्रियं तदतीतस्य कस्यापि वस्तुनः।

२६८.रज्जुः सर्प इव प्रतिभायात्
सहजमिदं यन्निन्द्यं न सताम्।
सर्पो रज्जुं 'त्वमेव सर्पोऽ
सी'ति स्तौतीत्येतदवद्यम्॥

अवद्यम्=गर्ह्यम्।

२६९.'तदशक्यं स्यादेतदशक्यं
स्या'दिति जृम्भणकृद्भिः सृष्टम्।
मन्त्रं विस्मर, 'भलोकनिलयैर्
नृत्यामी'ति स्यान्मन्त्रस्ते॥

भम्=नक्षत्रम्।

२७०.'प्रामादिकं न कञ्चिद् दोषं
कुर्वे धीर्मम जागर्ति सदा।'
एवं दम्भे मम जाते बत,
पादौ स्खलितौ पातोऽभून्मे॥

२७१.'ऐच्छं चन्द्रं, परन्त्वलगतां
पादौ कर्दम' इति मा शोच।
यत्नं द्रढय, त्वया सुहृत्त्वं
कुर्वन्ति भानि द्रष्टास्यचिरात्॥

परन्तु+ अलगतां=लग्नौ।

कुर्वन्ति=वर्त.कृ.द्वि.ब.(नपुं)कृ+शतृ। भानि=नक्षत्राणि।

२७२.केचन निम्नस्तरवत्स्वान्ताः
स्वेषां कामुकतां गूहन्तः।
अश्लीलपद्यरचनोद्धृतिभिः
कुर्वन्ति काव्यशास्त्रग्रन्थान्॥

२७३.कार्यालयान्निवृत्तेरेव
क्षित्यां कार्यं तव न समाप्तम्।
स्वातन्त्र्यं संप्रत्युपलब्धं,
परमोत्कृष्टं साधय किमपि॥

२७४.श्लाघ्योऽस्येण ! स्वक-पाद-स्थित-
दृढविश्वासो धावन् प्रसभम्।
पश्यन्नग्रेऽपश्यन् पश्चाद् ;
यश्चित्रकस्य नखरान्मुक्तः॥

एण != हरिण!

नखरात्=नखात्।

२७५.'शाखालङ्घनकर्मणि निर्जित-
कपि'रिति पुरा ममासीद् बिरुदम्।
कुर्वन्तो जानुभ्यामंहन-
मधुना हसन्ति शिशवोऽपि मयि॥

वृद्धस्य बाल्य-कालिकं स्मरण-मिदम्। अंहनं=गमनम्। मयि=मम विषये। विषय-सप्तमी।

२७६.हे मरुभूमिनिवासिन् ! मूषिक !
'गृध्रो दूरेऽम्बर' इति ते धीः।
तं द्रुतडयनं त्वयि निहितदृशं
यद्यज्ञास्यः, किमतोषिष्यः ?॥

यदि+अज्ञास्यः=ज्ञा+लृङ्। म.पु.ए.
अतोषिष्यः=तुष्+लृङ्। म.पु.ए.

२७७.शान्तान् फुल्लान् फलितानपि ये
पश्यन्ति तरून् कपयोऽनुदिनम्।
ते क्रुध्यन्ति द्विषन्ति च मिथः
प्राणान्तकमपि विदधति युद्धम्॥

२७८.शास्त्रगिरामपनोद्यानां बुध !
खण्डनमुत्कृष्टो धर्मस्ते।
दोषेषु लौकिकेषु स्वास्यो-
द्धाटनमचलनयोग्योऽध्वा किम् ?॥

अप-नोद्यानां=दूरे उच्चाटनीयानां खण्डनीयानामिति यावत्। स्व+आस्य(वदन)+उद्धाटनम्।

२७९.विभिरपरैराक्रान्ते नीडे
स्वीये पक्षिन् ! औदासीन्यात्।
एतावन्तं कालमनैषीर्
अधुनाऽऽक्रोशसि 'ममैव तदि'ति॥

विभिः=पक्षिभिः।

२८०.'आतपतोऽवितुमात्मनं- धर
टोपीं, छत्रं गृहाण चे'ति।
घूक उपदिशति गृध्रं स्थिरदृश-
मभिवीक्ष्यमाणसूर्यमनुदिनम्॥

आतपतः अवितुं=रक्षितुम् आत्मानम्।

२८१.सुचिक्कणायां पङ्कसदृश्याम्
आर्द्रायां मृदि लग्नौ पादौ।
लग्नान् मुक्तामणीन् स्पृशेतां
पादौ तत्रैव च तावेव॥

२८२.भेकः कोऽप्युपसर्पतु काकं
निजकर्मवशाद् ; यत् स परेषु।
तदकुर्वत्सु द्राङ्क्षति भेकेष्व्
औन्मत्त्यस्य परा काष्ठा तत्॥

द्राङ्क्षति=घोरं वाशितं करोति। औन्मत्त्यस्य= उन्मत्तत्वस्य।

२८३.कन्दुकमादायाक्रीडमहं
मित्रैर्यत्र स यातः कालः।
कन्दुकमिव मामुपयुज्येदं
जीवनमधुना क्रीडत्यनिशम्॥

कन्दुकम् आदाय+ अक्रीडम् अहम्। जीवनं कर्तृ।

२८४.कूजसि कोकिल ! यस्मिन् वृक्षे
तस्मिन् मा श्रोतारः सन्तु।
किन्त्वन्यस्मिन् वृक्षे, कु-तले,
गिरिदर्यां वा ते सन्त्येव॥

कुः=भूमिः।

२८५.यदि मात्रयाऽल्पतमयापि त्वं
प्रमोदमपरेषां हृदि सृजसि।
अक्षिभ्यां परिमुञ्चसि जीवन-
सार्थक्यभवं प्रमोदबाष्पम्॥

त्वया अपरेषु जनेषु आनन्दे सृष्टे स्वयं संतोषमनुभवितुं शक्नोषि। पूर्वार्धे हेतुरुत्तरार्धे च फलमुक्तम्।

२८६.देहारोग्यं व्यायामेन
स्वान्तारोग्यं सुध्यानेन।
रसनारोग्यं वरया वाचा
कर्णारोग्यं संगीतेन॥

२८७.ध्यानेन जना ये पश्यन्ति
श्रियमन्तर्हृदि ते संपन्नाः।
ते हि दरिद्रा ये न कदाऽपि
ध्यानाध्वनि चिचलिषन्ति मूढाः॥

२८८.कियदपि वैभवमनुभव लोके
किन्त्वेकस्मिन् दिवसे सर्वम्।
त्यक्तव्यमिति च यातव्यमिति च
बोधो जागर्त्वनिशं हृदि ते॥

२८९.उन्मत्तोऽसि किमथवा निधनं
गतस्तवान्तस्साक्षी ? मूषिक !।
बिरुद'महिंसकमणि'रिति गोष्ठ्यां
येन ददासि त्वं गृध्राय॥

२९०.'कृतयोऽन्येषां दृष्टव्या, अथ
मयाऽपि कृतयः स्त्रष्टव्या' इति।
चिन्तनमनुसरदस्तु जनस्य
क्षित्यां वर्तनमखिलस्यापि॥

चिन्तनम् अनुसरत्
वर्तनम् अस्तु।

२९१.जीवत आप्तांस्तर्पय सुजनान्
यदि नैवं स्यात्तेषु गतेषु।
पश्चात्तापजमश्रु न शुष्यति
ललाटघट्टनतोऽपि शिलायाम्॥

२९२.मन्यन्ते स्वान् मानुषधुर्यान्
केऽपि जना ; मन्यन्तां कामम्।
यत्ते सर्वानन्यान् गणयन्त्य्
अपकृष्टांस्तन्नितरां हेयम्॥

२९३.तीक्ष्णाग्रशृङ्गवत्सु बलिष्वपि
वृषभेषु सैनिकेषु भवत्सु।
भेके सैन्याधिपतौ सति किं
विजयस्याशालेशोऽपि स्यात् ?॥

२९४.दुरहङ्काराभिधया रुजया
ग्रस्तानाम् अधिकारयुतानाम्।
दर्पाद् राजोचितोऽपि सौधो
दीनप्रार्थ्यो जायत उटजः॥

रुजया=रोगेण।

२९५.अन्येष्वनभीष्टामप्युपकृति-
कणिकां निर्बन्धेन विधाय।
'स्वकराभ्यामुद्धारं तेषाम्
अकरव'मिति केऽप्यतिकत्थन्ते॥

कत्थन्ते आत्म-स्तुतिं कुर्वते। कत्थ श्लाघायाम्।

२९६.यज्ज्योतिरिङ्गणानां रात्रौ
स्फुरणानि नयनपर्वायन्ते।
महिमा तदन्धकारस्य ; भुवि
क्षुद्रं केवलमस्ति न किमपि॥

नयनपर्वायन्ते=नेत्रोत्सव इवाचरन्ति।

२९७.'उपरिस्थाः सर्वेऽपि श्रेष्ठा
नीचस्थानस्था अपकृष्टाः'।
इति मा वद ; वृक्षाग्रे पश्य
ध्वाङ्क्षं, तदनु जले हंसं च ॥

ध्वाङ्क्षं=काकम्।

२९८.क्लेशानां राशिं निपतन्तं
स्वयमुत्प्रेक्ष्योद्विग्ना रभसात्।
किमप्युपक्रममाणाः-काष्ठां
विदधति-दीर्घां पर्वतपङ्क्तिम्॥

२९९.जिह्वामेकां स्मरसि, परन्तु
श्रोत्रे द्वे तव किं विस्मरसि ?।
सार्वज्ञ्याभिनयं त्यज, सूक्तीः
शृण्वपरेषां, वर्धय बोधम्॥

३००.नीचानां स्तुतिरबलं नेत्रं,
क्षीणं स्मरणं , चपलं चित्तम्।
हास्यायैतत् सर्वं गलबिल-
कबलितपातञ्जलसूत्राणाम्॥

३०१.अज्ञानामपि बोधः स्यादिति
साहित्यस्य स्तरो न भज्यः।
कः प्रतिपिपादयिषति ध्यानं
वक्रेण कशेरुकेणाक्लिष्टम् ? ।

न भज्यः=न भङ्गम् आपादनीयो, न न्यूनीकरणीय इति यावत्। 'वक्रेण कशेरुकेण क्रियमाणं ध्यानम् अक्लिष्टम्=क्लेश-रहितं(सरलम् )' इति कः प्रति-पिपादयिषति ?

३०२.स्त्रीणां विषये स्वैरं दूषण-
वाक्यं कमपि सदुक्तिविशेषम्।
मन्यन्ते केऽपि महापुरुषं-
मन्याः संस्कृतविद्वन्मणयः॥

३०३.परमोत्कृष्टाः सन्ति जनास्ते
ये केवलं न दूरे सन्तम्।
मणिमन्वेषन्तेऽपि त्वग्रे
सन्तं प्रत्यभिजानन्ति मणिम्॥

३०४.यज्जीवनमस्माकं शिथिलं
तत् संजनयेद् दृढां विरक्तिम्।
न विरक्तिनाटकं, न प्रवचन-
चातुर्यं, नाप्यतिजडिमानम्॥

३०५.'अमुकं फलममुकाद् ध्याना'दिति
ये दुन्दुभिमाघ्नन्ति त एव।
तत्फलविरहे, 'शम आध्यात्मिक
एव फल'मिति ब्रुवन्ति गप्पम्॥

३०६.भक्ष्ये पाचित एवान्यजनैः
स्तुतिमुत निन्दां विदधासि त्वम्।
भक्ष्यं स्वेन तु पाचितमधुना
परिवेषय, वह पाचकधर्मम् ॥

पाचिते भक्ष्ये= पाचितभक्ष्य-विषये। विषय सप्तमी। शरावेषु= Plates

३०७.काकस्तावक, कोकिल ! नचिरात्
काकः कण्ठं तव कुष्णाति।
निःसारयसि न 'कुहूं' तदानीं
यो रुधिरं स्रावयसि द्राङ्क्षन् ॥

स्तावक=स्तव-कारिन्। कुष्णाति= चञ्च्वा कुट्टयति। नचिरात्=शीघ्रम्। द्राङ्क्षन्=उच्चैः आक्रोशं मुञ्चन्।

३०८.स्तुहि मा श्येनं गृध्रं वा, याव्
उत्कौ स्वादयितुं तव रुधिरम्।
मा निन्दैणं गां वा, यौ तव
शश ! न क्लेशं कुरुतः कमपि॥

यौ+उत्कौ= उत्कटाभिलषितवन्तौ। निन्द(लोट् म.पु.ए)+एणं= हरिणविशेषम्।

३०९.प्रणुदति पृथिवीं प्रति काऽपि त्वां
वीची ; ग्रहमन्यं प्रत्यन्या।
आकर्षन्तीरपकर्षन्तीर्
वीचीस्ताः प्रत्यभिजानीहि॥

प्रणुदति=Pushes

३१०.येऽन्वेषन्ते पिशुना हन्तुं
विक्रेतुमपि च चित्रपतङ्गान्।
शिरांसि तेषां छेदयितव्यान्य्
अगणितपरागसंस्पर्शानाम्॥

पिशुनाः=खलाः। चित्रपतङ्गान्= Butteflies (Apte's dic tionary) अगणित...= अचिन्तित..

३११.नीडं, शाखाः, शाखी, मित्राण्य्,
एतत् सर्वं त्यक्त्वाऽन्यत्र।
प्रस्थानस्य प्राप्तः समयो
द्रढय तवोरः संप्रति पक्षिन् !॥

द्रढय=दृढीकुरु। तव+उरः =Chest

३१२.दैन्याद् विनयं दर्पाद् धैर्यं
विविनक्षि यन्न तत् पर्याप्तम्।
काभ्यामूर्ध्वं काभ्यां नीचैर्
यातव्यमिति च निश्चिनुहि त्वम् ॥

विविनक्षि= विविच्य जानासि। वि+विचिर् पृथग्भावे रुधादिः।

३१३.सर्वैरप्येकस्मिन् दिवसे
मर्तव्यमेव ; निर्धार्यैतत्।
जीवसि यावत्पर्यन्तं कौ
स्वकमुन्नमय्य कन्धरमेधि॥

कौ=भूम्याम्। स्वकं कन्धरं= कण्ठम् उन्नमय्य एधि= भव। अस भुवीत्यस्य लोटि म.ए.। क्रोष्टुः = शृगालस्य।

३१४.यदरण्येऽस्त्येतादृक् सिंहस्
तद् भृशमाश्चर्यं तनुते ; यः।
क्रोष्टुरनुग्रहदृष्टिं वाञ्छन्
तत्पादान् मृदु संवाहयति॥

३१५.मा विस्मर भूरस्त्येवेति,
त्वन्मस्तिष्के धीरस्तीति।
तदा - यदा शून्या इव सर्वे
बन्धुसखा दृशि नैव पतन्ति॥

बन्धुसखाः=बन्धवः सखायश्च। समासान्तष्टच्।

३१६.सागरभवानि शङ्ख(ख)वराटक-
मुखानि वस्तून्यतिचारूणि।
विक्रीयन्ते विरचितहिंसैर्
अप्रतिभूभिः क्रीयन्ते च॥

मुखानि=प्रभृतीनि। विरचितहिंसैः= भाजनेषु तेषां वराटिकादीनां क्वथनेन तज्जनकानां जीविनां हत्यां कुर्वद्भिः, एवंरीत्या हिंस्रैः। अ-प्रतिभूभिः= Irresponsible

३१७.जनैः कियद्भिः सृजसि निजत्वं ?
कियद्भिरपि बध्नासि स्नेहम् ?
त्वमेव तव वास्तविको बन्धुस्
त्वमेव तव वास्तविकं मित्रम्॥

३१८.परनिर्बन्धेनापि कदाचित्
परमोत्कृष्टं सिद्ध्यति कार्यम्।
स्वमनःकामनयाऽपि कदाचित्
कर्म क्षुद्रस्तरवद् भवति॥

३१९.कर्म ज्ञानं भक्ती राजा
तन्त्रमिति योगशब्दात् पूर्वम्।
लग्नाः शब्दाः किमपि न कुर्वन्त्य्
असति ध्याने गाढगभीरे॥

३२०.सर्वत्र सर्वदाऽसंतृप्त्या
मुणनं केषाञ्चन रुक् तीव्रा।
भिषज्यते किं भिषगाचार्यैर्
वाग्भटसुश्रुतचरकाद्यैः सा ?॥

मुण अव्यक्ते शब्दे। रुक्=रोगः।

३२१.स्तब्धः प्रतिमायोगीवैधि
त्वं चमरपुच्छ ! जीवसि येन।
दृशं परिहरन् कथमपि तीक्ष्णाम्
उपरि परिभ्रमतः श्येनस्य॥

प्रतिमायोगी+इव+एधि= असभुवीत्यस्य लोट्. म.ए. (प्रतिमा-योगी इव भव।)

३२२.हृदयं ते क्षुभितं, निष्पन्दी-
भूतं, गज ! शतधा यातं च।
दग्धे दावेन वने तृण्या-
वृक्षलतासुमफलसंपूर्णे॥

तृण्या=तृणसमूहः।

३२३.स जनो दिदरिद्रासति योऽन्य-
ग्रन्थान् गले गिगिलिषत्यनिशम्।
नानुबुभूषति यः शब्दश्रिय-
मरिरचयिषया स्वग्रन्थस्य॥

दिदरिद्रासति, गिगिलिषति,न+अनुबुभूषति= (क्रमेण)दरिद्रो भवितुं, गिलितुं, (न)अनुभवितुं च इच्छति।सन्।अ-रिरचयिषया = रचयितुमिच्छाराहित्येन हेतुना।

३२४.अज्ञातादागच्छं स्थानाद्
अज्ञातं गच्छामि स्थानम्।
अज्ञातादायातैः स्थानात्
त्रिचतुरदिनानि संपृक्षेऽहम्॥

सं+पृक्षे=संपर्कम् अनुभवामि। पृची संपर्चने लट्.उ.ए.

३२५.न केवलं 'कुरु तत् कुर्वेत-'
च्छ्रूयन्ते गिर इत्थम्भूताः।
अपि तु 'व्यादत्तास्यं भूतं
पश्य तवाग्रे किमपी'त्थं च॥

व्यादत्तास्यं = विस्तारेण उद्घाटितमाननं यस्य। कालरूपम्।

३२६.निस्सार्यान्यकृतां गजमूर्तिं
संस्थाप्य स्वकृतां कपिमूर्तिम्।
शिल्पिनमपमान्यान्यं शिल्पिन् !
किं त्वं सिषाधयिषसि ? ब्रूहि॥

शिल्पिनम् अपमान्य (ल्यप्) +अन्यम्।

३२७.परविहिते चित्रे स्वकृतत्व-
ख्यापनमवगच्छामः कामम्।
हे चित्रकार ! परचित्रं यद्
विकरोषि तत्तु किमिति न विद्मः॥

विकरोषि = विकारं करोषि।

३२८.कुसुमानि विकस्यासुर्भ्रमरा
मकरन्दं तेषां पिब्यासुः।
वृक्षाः फल्यासुः कपिकीरा
भोजनतृप्ता भूयासुश्च॥

कपयः कीराः = शुकाः+च।

३२९.धीः संगसीष्ट कर्मभि,रुक्तिः
सत्येन, वर्ष्म शक्त्याऽधिकया।
भुव्येधिषीष्ट चाध्यात्मिकता-
विषये चिन्तनममौढ्यलेशम्॥

संगसीष्ट=मिलनं कृषीष्ट। एधिषीष्ट= वृद्धिं प्राप्सीष्ट। एध वृद्धौ। चिन्तनम् अ-मौढ्य-लेशम्।

३३०.योगिभ्रान्तिरयोगिषु नटने
पटुषु न भूयात् कस्यापि भुवि।
तेऽन्ये च परिज्ञासीरंस्तं
येषां यद्ज्ञानाभावोऽस्ति॥

परि+ज्ञा+
आशीर्लिङ्।प्र.पु.ब.

३३१.अज्ञानाद् वा दाक्षिण्याद् वा
भीतेर्वाऽपि तृणं तृणराजः।
अभिमानधनानामेव पुरः
साष्टाङ्गं न कदाचिन्नम्यात् ॥

तृणराजः=
तालतरुः।
पुरः=अग्रे।

३३२.'भाग्यं वा दौर्भाग्यं वाऽपि
स्वललाटे लिखितं स्वयमेव।'
इति धीर्दीप्यान्मौढ्याख्यगर्त-
निपतनभीतिविरहिते लोके॥

दीप्यात्=दीपधातोः
आशीर्लिङ्।प्र.पु.ए.

३३३.स्वकर्मनिरतेषु कदापि पर-
क्लेशलवमकुर्वत्सु श्वेव।
बुक्कन् सभासु नादरमर्हत्य्
एवं जनेषु बुद्धिर्भायात्॥

स्वकर्मनिरतेषु=
स्वकर्मनिरतानां
विषये।सति
सप्तमी।भायात्=
भा+आशीर्लिङ्।

३३४.कुटुम्बवृद्धीयं यद् ज्ञानं
भावार्द्रं तेन समं शुष्कम् ।
न विश्वविद्यानिलयीयमिति
स्पष्टं विवेकिनो भुत्सीरन्॥

कुटुम्बेषु ये वृद्धा
जनास्तदीयम्।

भुत्सीरन्=ज्ञानं
प्राप्नुयुः।बुध्+
आशीर्लिङ्।प्र.पु.ब.

३३५.गङ्गायाः शुद्धेर्यत्ना अथ
विपिनानां सृष्टेरपि यत्नाः।
सुफलेग्रहयो भूयासुः, स्मित-
मपि भुवि भूरि विकस्याच्चारु॥ ▫▫▫▫

घन...=सान्द्र...